# चम्पूरामायणे

# बालकाण्डम्

२५ – ११.०६.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम्

- विश्वामित्रस्य यागारम्भः
- यागस्थले राक्षसानामाक्रमणम् – हृत्वाद्रेः शिखराणि
- राक्षसैः सह रामस्य युद्धम् – सङ्क्रान्तवर्णान्तर...
- रामबाणेन मध्येसमुद्रं क्षिप्तः मारीचः – मारीचनीच...

Samskrtam - Value Education ...

# सुबाहुराहवोन्मत्तः कृत्तः काकुत्स्थपत्रिणा ।
# मुनीनामनभिप्रेतः प्रेतनाथातिथिः कृतः ॥ ५१ ॥

- सुबाहुः, आहव-उन्मत्तः, कृत्तः, काकुत्स्थ-पत्रिणा, मुनीनाम्, अनभिप्रेतः, प्रेतनाथ-अतिथिः, कृतः ।
- कृतः = विहितः
- कः कृतः? सुबाहुः
- कीदृशः कृतः? प्रेतनाथातिथिः = यमस्य आगन्तुः

# सुबाहुराहवोन्मत्तः कृत्तः काकुत्स्थपत्रिणा ।
# मुनीनामनभिप्रेतः प्रेतनाथातिथिः कृतः ॥ ५१ ॥

- कीदृशः सुबाहुः? आहवोन्मत्तः, काकुत्स्थपत्रिणा कृत्तः, मुनीनाम् अनभिप्रेतः
- आहवोन्मत्तः = युद्धव्यग्रः
- काकुत्स्थपत्रिणा = रामबाणेन, कृत्तः = छिन्नः
- मुनीनाम् = ऋषीणाम्, अनभिप्रेतः = असंमतः, लोकपीडकत्वात्

# सुबाहुराहवोन्मत्तः कृत्तः काकुत्स्थपत्रिणा ।
# मुनीनामनभिप्रेतः प्रेतनाथातिथिः कृतः ॥ ५१ ॥

- अन्वयः – मुनीनाम् अनभिप्रेतः, आहवोन्मत्तः सुबाहुः काकुत्स्थपत्रिणा कृत्तः प्रेतनाथातिथिः कृतः ।
- तात्पर्य्यम् – लोकपीडकत्वात् ऋषीणाम् असंमतः सुबाहुः युद्धव्यग्रः रामबाणेन च्छिन्नः यमलोकं प्रेषितः ।

Samskrtam - Value Education ...

सुबाहुराहवोन्मत्तः कृत्तः काकुत्स्थपत्रिणा ।
मुनीनामनभिप्रेतः प्रेतनाथातिथिः कृतः ॥ ५१ ॥

- आहवोन्मत्तः – आहवेन उन्मत्तः
- कृत्तः – "कृती छेदने" + क्त
- काकुत्स्थपत्रिणा – काकुत्स्थस्य पत्री, तेन । नकारान्तः, पुं, ३.१ । "कलम्ब-मार्गण-शराः पत्री रोप इषुः द्वयोः" (अमरः)
- अनभिप्रेतः – न अभिप्रेतः । अभि+प्र+ "इण् गतौ" +क्त ।

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# सुबाहुराहवोन्मत्तः कृत्तः काकुत्स्थपत्रिणा ।
# मुनीनामनभिप्रेतः प्रेतनाथातिथिः कृतः ॥ ५१ ॥

- प्रेतनाथातिथिः – प्रेतानां नाथः । प्रेतनाथस्य अतिथिः ।

- अनुष्टुप् छन्दः

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

वंशस्पृशा हृदयहारिफलान्वितेन
रामेरितेन सहसा सह सायकेन ।
स्नेहार्दितेन निरगादनुरागिणीव
प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- वंश-स्पृशा, हृदय-हारि-फल-अन्वितेन, राम-ईरितेन, सहसा, सह, सायकेन, स्नेह-आर्दितेन, निरगात्, अनुरागिणी, इव, प्राण-आवलिः, हृदयतः, पिशिताशनानाम् ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन ।
स्नेहार्दितेन निरगादनुरागिणीव प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- निरगात् = निर्गता
- का निरगात्? प्राणावलिः = पञ्चप्राणश्रेणिः
- कस्मात् निरगात्? हृदयतः = हृत्प्रदेशात्
- केषां हृदयतः? पिशिताशनानाम् = राक्षसानाम्
- कथं निरगात्? सहसा = शीघ्रम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन ।
स्नेहार्दितेन निरगादनुरागिणीव प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- केन सह निरगात्? सायकेन सह = बाणेन सह
- कीदृशेन सायकेन सह? वंशस्पृशा, हृदयहारिफलान्वितेन, रामेरितेन, स्नेहार्दितेन
- वंशस्पृशा = वेणुसम्भवेन
- हृदयहारिफलान्वितेन = हृदयविदलनसमर्थ-बाणाग्र-युतेन
- रामेरितेन = श्रीरामप्रयुक्तेन
- स्नेहार्दितेन = तैलादिपरिशोधितेन

वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन ।
स्नेहार्दितेन निरगादनुरागिणीव प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- का इव निरगात्? वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन स्नेहार्दितेन (नायकेन) सह अनुरागिणी इव
- अनुरागिणी = अनुरागवती युवतिः
- नायकेन सह = प्रियकरेण सह
- वंशस्पृशा = उत्तमवंशजातेन, हृदयहारिफलान्वितेन = मनोहरलाभसमृद्धेन, रामेरितेन = सुन्दरीभिः अभिलषितेन, स्नेहार्दितेन = प्रेमपूर्णेन

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन ।
# स्नेहार्दितेन निरगादनुरागिणीव प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- अन्वयः – वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन स्नेहार्दितेन नायकेन सह अनुरागिणी इव, वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन स्नेहार्दितेन सायकेन सह प्राणावलिः पिशिताशनानां हृदयतः निरगात् ।
- तात्पर्य्यम् – यथा काचित् अनुरागवती युवतिः उत्तमकुलप्रसूतेन, मनोहरलाभसमृद्धेन, सुन्दरीभिः अभिलषितेन, प्रेमपूर्णेन नायकेन सह शीघ्रं निर्गच्छति, एवं प्राणश्रेणिः राक्षासानां हृदयतः वेणुसम्भवेन, हृदयविदलनसमर्थबाणाग्रयुक्तेन, श्रीरामप्रयुक्तेन, तैलादिसंस्कृतेन बाणेन सह झटिति निर्गता ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन ।
स्नेहार्दितेन निरगादनुरागिणीव प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- वंशस्पृशा – वंशं स्पृशति । शकारान्तः, पुं, ३.१ । "वंशो त्वक्सार-कर्मार...", "वंशोऽन्ववायः सन्तानः" (अमरः)
- हृदयहारिफलान्वितेन – हृदयं हर्तुं शीलमस्य । हृदयहारि च तत् फलं च । हृदयहारिफलेन अन्वितम्, तेन । "हृदयं मानस-उरसोः", "फलं बाणाग्र-लाभयोः" (विश्वप्रकाशः)
- रामेरितेन – रामेण ईरितः, तेन । रामाभिः ईरितः, तेन ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

वंशस्पृशा हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन ।
स्नेहार्दितेन निरगादनुरागिणीव प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- स्नेहार्दितेन – स्नेहेन आर्दितः, तेन ।
- निरगात् – निर् + “इण् गतौ” – लुङ्, प्रथम.१ ।
- अनुरागिणी – अनुरागः अस्याः अस्ति – अनुराग + इन् (तद्धितः) + ङीप् (स्त्री)
- प्राणावलिः – प्राणानाम् आवलिः – इकारान्तः, स्त्री, १.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

वंशास्पृशा हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन ।
स्नेहार्दितेन निरगादनुरागिणीव प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- हृदयतः – हृदय + तसि (तद्धितः – 'पञ्चम्यास्तसिः')
- पिशिताशनानाम् – पिशितम् अश्नन्ति, तेषाम् ।
- वसन्ततिलका वृत्तम् ।

# वंशास्पृशा हृदयहारिफलान्वितेन रामेरितेन सहसा सह सायकेन ।
# स्नेहार्दितेन निरगादनुरागिणीव प्राणावलिर्हृदयतः पिशिताशनानाम् ॥ ५२ ॥

- सहालङ्कारः, समासोक्तिः, उपमा, श्लेषः
- "सहोक्तिः सहभावश्चेत् भासते जनरञ्जनः"
- "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्"
- "उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः"
- "नानार्थसंश्रयः श्लेषः"

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

अथ निशिचरमाथाद्वीतवैतानविघ्नः
मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं
यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५३ ॥

- अथ, निशिचर-माथात्, वीत-वैतान-विघ्नः, मुनिः, अवभृथ-कृत्यम्, विश्व-हृद्यम्, समाप्य, अमनुत, जय-लक्ष्म्या, रामम्, आजौ, समेतम्, यजन-जनित-मूर्त्या, योक्तुम्, अव्याज-लक्ष्म्या

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

अथ निशिचरमाथाद्वीतवैतानविघ्नः मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५३

- अथ = तदनतरम्
- समाप्य = कृत्वा
- कः समाप्य? मुनिः = विश्वामित्रः
- कीदृशः मुनिः? वीतवैतानविघ्नः – वीतः = निरस्तः, वैतानः = यज्ञस्य, विघ्नः = अन्तरायः यस्य तादृशः सन्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

अथ निशिचरमाथाद्वीतवैतानविघ्नः मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५३

- कस्मात् हेतोः वीतवैतानविघ्नः? निशिचरमाथात् – निशिचराणाम् = राक्षसानाम्, माथात् = संहरणात्
- किं समाप्य? अवभृथकृत्यम् = दीक्षान्तस्नानम्
- कीदृशम् अवभृथकृत्यम्? विश्वहृद्यम् = सर्वसंमतम्, लोकोपकारकत्वात्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अथ निशिचरमाथाद्वीतवैतानविघ्नः मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५३

- अमनुत = अचिन्तयत्
- किम् अमनुत? योक्तुम् = सङ्घटयितुम्
- कं योक्तुम्? रामम्
- कीदृशं रामम्? समेतम् = सहितम्
- कया समेतम्? जयलक्ष्म्या = विजयश्रिया
- कुत्र जयलक्ष्म्या समेतम्? आजौ = युद्धे

अथ निशिचरमाथाद्वीतवैतानविघ्नः मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५३

- कया योक्तुम् अमनुत? अव्याजलक्ष्म्या = तत्त्वतः लक्ष्मीरूपया सीतया
- कीदृश्या अव्याजलक्ष्म्या? यजनजनितमूर्त्या = जनकयज्ञे अवतीर्णरूपया

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# अथ निशिचरमाथाद्वीतवैतानविघ्नः मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
# अमनुत जयलक्ष्म्या राममाजौ समेतं यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५३

- अन्वयः – अथ निशिचरमाथात् वीतवैतानविघ्नः मुनिः विश्वहृद्यम् अवभृथकृत्यं समाप्य आजौ जयलक्ष्म्या समेतं रामं यजनजनितमूर्त्या अव्याजलक्ष्म्या योक्तुम् अमनुत ।
- तात्पर्य्यम् – राक्षसानां संहारेण निरस्तयज्ञान्तरायः विश्वामित्रः दीक्षान्तस्नानं समाप्य युद्धे विजयश्रिया सहितं रामं जनकयज्ञे जातया तत्त्वतः लक्ष्मीस्वरूपया सीतया सङ्घटयितुं चिन्तितवान् ।

अथ निशिचरमाथाद्वीतवैतानविघ्नः मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५३

- निशिचरमाथात् – निशिचराणां माथः, तस्मात् ।
- वीतवैतानविघ्नः – वैतानः विघ्नः, वीतः वैतानविघ्नः यस्य सः ।
  “क्रतुविस्तारयोरस्त्री वितानं”, “विघ्नोऽन्तरायः प्रत्यूहः” (अमरः)
- विश्वहृद्यम् – हृदयस्य प्रियम् – हृदय + यत् (तद्धितः), विश्वस्य हृद्यम् ।
- अमनुत – “मनु अवबोधने” – लङ्, प्रथम.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अथ निशिचरमाथाद्भीतवैतानविघ्नः मुनिरवभृथकृत्यं विश्वहृद्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं यजनजनितमूर्त्या योक्तुमव्याजलक्ष्म्या ॥ ५३

- आजौ – इकारान्तः, स्त्री, ७.१ । “स्त्रियः संयत्-समिति-आजि-समित्-युधः” (अमरः)
- यजनजनितमूर्त्या – यजने जनिता, यजनजनिता मूर्तिः यस्याः सा, तया
- योक्तुम् – “युजिर् योगे” + तुमुन्
- अव्याजलक्ष्म्या – न विद्यते व्याजः यस्याः सा, अव्याजा लक्ष्मीः, तया
- मालिनीवृत्तम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# सङ्क्षेपः

- रामेण सुबाहोः संहारः – सुबाहुराहवोन्मत्तः
- राक्षसानां प्राणत्यागः – वंशस्पृशा
- सीतारामयोः संयोगं साधयितुं विश्वामित्रस्य निर्णयः – अथ निशिचरमाथाद्
- मिथिलामार्गे कुशनाभस्य कथा – पुरा खलु






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in